येषामारवदपात्रमन्यत्, प्राणयत्यनुदिनं धनैस्त्वयि ।
तस्करेऽपि मृगमर्थिता गतं, शेरते पुरि सुखेन रक्षकाः ॥ १०
तावकीनयशसैव शाश्वती, पूर्णिमा शशिसमेन तन्वता ।
उज्ज्वले जगति पांशुलाकुलै-राकुलैरहह ! साधुता दधे ॥ ११
त्वं महोभिरहिमांशुकोटिवद्, निष्प्रभीकृतजनेन राहुणा ।
तिग्मभानुरनुपद्रुतोऽभवत्, सीम्नि वर्षति विशेषहर्षित ॥ १२
इत्थमद्भुतविभूतिभूरभूद्, देव ! देशजनता नयात् तव ।
जैनधर्मपरिवर्धनोचितं, तन्महाश्रमणशासनं स्मर ॥ १३
वाग्विवस्य सुरसिन्धुबन्धुरां, भारतीमिति निशम्य सम्मदी ।
आह किञ्चन विचिन्त्य चातुरी-रोचितं सचिवचक्रशेखर ॥ १४
आत्मगोत्रगुरव पुराऽभवन्, विश्रुता भुवि महेन्द्रसूरयः ।
ये सिताम्बरवरै सिताम्बरै, निर्ममे जगदमेयकीर्तिभिः ॥ १५
यैरजीयत जगत्त्रयीजयी, मन्मथोऽयमिदमद्भुतं न न ।
यद्बुधाऽपि यशसा यतो जितं, कार्मणं मुकुटकुड्मिल शशी ॥ १६
शान्तिसूरिरथ तत्पदश्रियो ऽप्यद्भुतानि कृतिषु शाखरोऽभवत् ।
उद्गृणन्ति महतोऽपि यद्गुणान्, निस्तृतामृतरसा रसाधिकम् ॥ १७
य सुदर्शनधरं हरिश्चमा-न्वासृजद् गुरुरिति स्वयं रतिः ।
कान्तसोमकलमांगशङ्कया, य जयीति मदनोऽपि नैक्षत ॥ १८
तत्पदेऽनिविदितप्रथावथा ऽऽनन्दसूर्यमरसूरिराजकौ ।
वासमन्दिरविलासमन्दिरं, श्रेयसा मुनिविभू बभूवतु ॥ १९
शैशवेऽपि मदमत्तवादविद्वारवारणनिवारणक्षमौ ।
यौ जगाद जयसिंहभूपति-व्याघ्र-सिंहशिशुकाविति स्वयम् ॥ २०
जग्मतोर्गगति निर्भरं ययो-र्यद्दवचमगमन् विवादिन ।
स यदि स्फुटयशानुवादतः, स्वस्य मन्दगुणतामदर्शयत् ॥ २१
तत्पदाम्बुरुहषट्पदा पदं, भेजिरेऽथ हरिभद्रसूरयः ।
यैर्विलङ्घ्य कुसुमानि कान्तिभि-र्लयैव कुसुमायुधो जितः ॥ २२
संयमप्रभृतिभिस्तथा गुणै-र्यैर्मनः पदमपूरि भूरिभिः ।
न प्रवेष्टुमिह मन्मथो यथा ऽन्तरतामपि गतः क्षमोऽभवत् ॥ २३
सन्ति सम्प्रति तदीयशासने, सूरयो विजयसेनसूरयः ।
उज्झितो जगति यैर्महाबल-मन्मथोऽपि मनमेदनोऽभवत् ॥ २४

सर्वतोमुखतपोहुताग्नैर्यैर्हुत स्मर इति क विस्मय ? ।
निर्जित पुरजिता पुरा यतो, नेनमानतुल्मिनाऽपि स ॥ २५
गम्यते तपनरम्यतेजस स्तस्य वदनविधि सया गुरो ।
देशना समधिगम्य तन्मुखाद्, धर्मकर्मणि निधीयते मन ॥ २६
इत्युदीर्य मनिभासुर पुरस्कृत्य कृत्यविदसौ सहोदरम् ।
कम्पयन् कलियुग मनोरथै रासमाद वसतिं मुनीशितु ॥ २७
द्वारमध्यमविशन्निषेधिका मुद्रिरन् गुरुमवेत्य तपुर ।
बाष्परुद्धनयन पदे पदे, सम्मदेन घनगद्गदोऽस्खलत् ॥ २८
दुषमाविषमतापतापिता, वीजयन्निव भरामसौ चिरात् ।
अञ्चलेन करचञ्चलेन स चक्रिवान् गुरुनमस्कृतिं कृती ॥ २९
दन्तदीप्तिपटलच्छलोच्छल-न्मूर्तिम सुकृतवर्मितामिव ।
बिभ्रदुद्दुरितराशिराशिप, निर्ममे तदनु निर्ममेश्वर ॥ ३०
सोऽभ्युदञ्च्य कथमप्यथ क्षिते र्भक्तिभारनमित शिरश्चिरात् ।
अग्रतो मुनिविभोर्व्यभूषयद्, युक्तमासनमयुक्तवासन ॥ ३१
आकलय्य गुरराक्षिका मुख-द्वारि निस्फुरितदन्तदीप्तिवत् ।
देशना सचिवभर्तुरग्रत कर्तुमारभत सूरिशेखर ॥ ३२
वीतरागमतधर्मकारिणि, साधुवृत्तगुरुभक्तिभासुरा ।
श्रावका कतिचिदात्मभावना-दान शील-तपसो भवन्ति चेत् ॥ ३३
दान शीलतपसा विजित्वरी, भावनैव भवनाशिनी भवेत् ।
सा पुनर्विरच्यते प्रभावना, सा तु सम्पदि सुखेन साध्यते ॥ ३४
अस्थिरा करभिका इव श्रिय, पातयन्ति नरकावटे नरम् ।
कश्चिदेव निपुण नियोजक, लङ्घयति विकया भवाटवीम् ॥ ३५
श्रावकत्वममल कुल करा चक्रवाटमपि कश्चिदुद्वहन् ।
सम्पदा ललनयेव लोलया, पीतमद्य इव मोह्यत जन ॥ ३६
श्रीलता शुचिवरेषु रोपिता, स्थानकेषु समये यथाविधि ।
पुष्पिताऽद्भुततरैर्यशोभरै-राशु पुण्यफलदेनवे भवेत् ॥ ३७
न स्थिरा क्वचन यान्ति सम्पद, सम्मिलन्ति रसवत् कथञ्चन ।
सम्पद प्रकटितप्रभावना, कस्यचिद् यदि भवति सिद्धये ॥ ३८
पावयन्ति परिकॢप्तभावना-दान शील-तपस स्वमव तत् ।
विश्वशासनविकाशदीपिका, व्यातनोति विरल प्रभावनाम् ॥ ३९

जल्पितानि बहुशः प्रभावना-कारणानि मुनिभिः पुरातनैः ।
उत्सवो भवति तीर्थयात्रया, तेषु शेखरमणिस्तु निस्तुषः ॥ ४०

सिद्धलोक इव सद्गता गतः, पूज्यते ननु जनो जिनैरपि ।
धन्य एव स तु तीर्थयात्रया, कोऽपि सङ्घपतिता निमर्त्ति यः ॥ ४१

दिक्पुरन्ध्रिमुकुराय कस्यचिद्, रौप्यदर्पणनिभो यशश्चयः ।
सङ्घसद्रदितरेणुमार्जना दिन्दुधामधवलो विलोक्यते ॥ ४२

सङ्घभर्तुरधिरोपितस्तथा, वर्द्धते सपदि पुण्यपादपः ।
दर्शयत्यमृतसन्निभं यथा, विष्टपत्रितयमौलिगं फलम् ॥ ४३

नागेन्द्रगच्छमुकुटस्य मुनेरनून-माकर्ण्य वर्ण्यमिति मन्त्रिपतिर्विचारम् ।
नत्वा स्वधामनि जगाम जिनेन्द्रयात्रा निर्माणनिर्भरमनोऽतिमनोरथश्री ॥ ४४

किञ्च—

वितन्वाते विश्वाङ्गणसदसि यावत् तव यशः
प्रतापाभ्यामभ्युल्लसितरुचिवादं विधु-रवी ।
भज स्थैर्यं सोमान्वयतिलक ! तावत् क्व सुकृते,
कृतैरेभ्यः सम्यक्त्वमिह गुण दोषैकनिकषः[1] ॥ १

ईदृक् कश्चिद् विपश्चिज्जनमनसि चमत्कारकारी पुराऽपि,
क्वापि प्रापि प्रबुद्धे वसुमति सुमतिर्वस्तुपालस्य तुल्यः ।
येन क्षीरार्णवार्णश्चयसिचयजुषः सिद्धसिन्धूत्तरीय
श्रीविस्तारोत्तराया व्यरचि शुभरुचि कीर्त्तिभिः कञ्चुकस्ते ॥ २

सच्चक्रनन्दकपुरोगदयाद्भुतश्री-स्त्वं वस्तुपाल ! पुरुषोत्तम ! जिष्णुरेव ।
तद् दूयते तु हृदि मेऽन्वहमेव शङ्खो, यत् सिन्धुराजतनुभूर्न करे गृहीतः ॥ ३

कविर्न को निस्तुषवस्तुपाल-यशः सुधानिर्झरसं रसज्ञः ।
प्रबन्धमास्वादयतेऽरिसिंह-मुखारविन्दैकमरन्दमेनम्[2] ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

## ॥ इति सुकृतसंकीर्त्तननाम्नि महाकाव्ये धर्मोपदेशनो नाम चतुर्थः सर्गः ॥ ४ ॥

१ ख-ग-'धवलोऽवलो' ॥ २ ख-'लसितरुचिविवाद' ॥

स तीर्थयात्रासु मनोमनोरथं प्रकाशयन् सम्मदमेदुरोद्यमः ।
पुरे पुरे श्राद्धजनाय नायको, विवेकभाजां लिखितान्यलीलिखत् ॥ १
अवाहनानामपि वाहनावली-मशम्बलानामपि शम्बलं बली ।
अकिङ्कराणामपि किङ्करान् कृती, वितीर्य सङ्घे समवीवहद् बहून् ॥ २
अदोषधीर्मन्त्रिपतिस्तदौषधी-रमीमिलद् विश्वरुजां विजित्वरीः ।
बभूव ताभिर्द्विगमौषधीपतिः, स कौमुदीकोमलकीर्त्तिकारणम् ॥ ३
वृथैव वैद्याननवद्यवैभवान्, समं स मन्त्री जगृहे महेच्छया ।
प्रभूष्णुसङ्घक्रमरेणुराशिजं, तदाऽखिलव्याधिहरं तमोऽपि यत् ॥ ४
न यद्यपि प्रौढवृषप्रभावतो, भविष्यति स्पृष्टमनोभिदा क्वचित् ।
परोपकाराय तथाऽप्ययं कृती, युगादिसर्वज्ञकृताग्रहोऽभवत् ॥ ५
अथासितीव्रव्रतनिर्जितान्तर-द्विपो भवाम्भोनिधिकुम्भसंभवान् ।
मठेषु गत्वा स्वयमद्भुतादरः, समं शमीन्द्रान् समवाहयत् कृती ॥ ६
सतां पतिः सङ्घपतित्वरोपणा-भिषेकमासाद्य गुरोः कराम्बुजात् ।
शुभे मुहूर्तेऽद्भुतवाह्यवाहिनी-वृतोऽचलच्चन्दनचर्चिताकृतिः ॥ ७
ततश्चतुर्विंशतितीर्थकृत्कला-कलादितीर्थङ्करदेवतालयः ।
चचाल नृत्यादिविनोदतत्परः, प्रजामुदश्रुस्नपितेन वर्त्मना ॥ ८
पिबन् पयः स्व सरितो वियद्वने, शशाङ्ककान्तीस्तृणुते तृणोपमाः ।
विशृङ्खलो यस्य यशः किशोरकः, समं निगोमैकगुरुस्ततोऽचलत् ॥ ९
अथानुचेलुर्नरचन्द्रसूरयो, लसन्नसत्तोमविलोकनच्छलात् ।
दृशैव सिञ्चन्त इवाद्भुतक्रमां, प्रयाति सङ्घे वसुधां सुधान्तया ॥ १०
अथाचलन् वायटगच्छवत्सलाः, कलास्पदं श्रीजिनदत्तसूरयः ।
निराकृतश्रीषु न येषु मन्मथः, चकार केलिं जननीविरोधतः ॥ ११
भवाभिभूतेन मनोभुवा भया-दनीक्षितैः कृतभवाभिभूतिभिः ।
अचालि सण्डेरकगच्छसूरिभिः, प्रशान्तसूरैरथ शान्तिसूरिभिः ॥ १२
शरीरभासैव पराभवं स्मरः, स्मरन्नगस्यत् किल यस्य दूरतः ।
स वर्द्धमानाभिधसूरिशेखर-स्ततोऽचलद् गल्लकलोकभास्करः ॥ १३
सहस्रशीर्षोरगकल्पकीर्त्तयः सहस्रधामप्रतिमानतेजसः ।
सहस्रनेत्रप्रमुखामरस्तुताः, सहस्रशोऽन्येऽपि च सूरयोऽचलन् ॥ १४
चतुर्दिगापूरणभूरिनिःस्वन-श्चतुःसमुद्रान्तमहीतलागतः ।
ततश्चतुर्यन्त्रनिश्चलोऽचल-च्चतुर्विधः सङ्घजनो यथाविधि ॥ १५

अगण्यपुण्यैर्भवसिन्धुपारम्-रमुद्ययं लोचनगोचरो गिरिः ।
इति स्मयस्मेरहृदो विदस्तदा, ससम्भ्रमाश्चक्रुरहो ! महोत्सवम् ॥ ३१
गतोऽग्रतोऽस्मिन् दुरितैर्न्नाविलो, विलोक्य नाभेयनिकेतकेतनम् ।
जनस्तदा शर्मरसोर्मिविह्वलो, मदान्न किं किं रचयाञ्चकार सः ! ॥ ३२
ननर्त्त कश्चित् पृथुसम्मदस्तदा, सलीलल्लोलायितपाणिपल्लवः ।
प्रतिप्रतीकं परितः कुतूहला-दलं यथाऽऽलोक्यत पुण्यसम्पदा ॥ ३३
बहूत्पतत्पाद्युगस्तदाऽपरो, ननर्त्त दूरप्रसरत्करच्छदः ।
विधातुमुड्डीय नगाधिरोहणं, मनोरथी पत्ररथीभवन्निव ॥ ३४
मत्रभ्रमिभ्रान्ततरः शिरोगरा-ऽधिरोपितं पापभरं त्यजन्निव ।
इलामिलन्मौलिरसन्दसम्मदो, ननाम विश्रामविधित्सया परः ॥ ३५
विलोकयन् कोऽपि वृषध्वजध्वजं, मुहुर्मुहुर्मङ्क्षु नमत्नमन्दधीः ।
उदञ्चित-न्यञ्चितमौलिलीलया, रराज मुक्तिश्रियमाह्वयन्निव ॥ ३६
अमुत्र शत्रुञ्जयशैलसन्निधौ, भवार्णवस्येव तटे तदा परः ।
निरीयितुं पातकजातकर्दमा-ल्लुलोठ सर्वाङ्गमुदारधीर्मुदा ॥ ३७
समुद्भवद्भावरसादचेतन-श्चिराय गत्यादिविवेकवर्जितः ।
परः शिलापुत्रसमोऽपि बान्धवा-न्मोचि रिष्टैरपि रिष्टशङ्कितैः ॥ ३८
इहाथ पाथस्तृणराजिराजिते, जितेन्द्रियो मन्त्रिपतिर्महीतले ।
श्रमापनोदार्थमवापयत् तदा, निवासमासन्नममुष्य भूभृतः ॥ ३९
अथाभजत् खिन्नजनप्रमोदिनो, दिनोपतापे सचिवः स किङ्करान् ।
मरुत्वरात् पैपदेय तत्क्षणं, शिलिन्ध्रदन्तुरविडम्बिताम्बुदान् ॥ ४०
सुवंशसंयोजितरूपशोभिता, विचित्रिता धातुरसेन सर्वतः ।
पदे पदे पर्वतपादसोदरा, वितेनिरे पीवरचीवरालयाः ॥ ४१
अनांसि धर्मक्षितिपस्य वप्रवत्, पदे पदे मण्डलितानि रेजिरे ।
तृणं द्विपत्पापमिवोदमूलयन्, यतो विनिस्सृत्य वृषा मदा इव ॥ ४२
गिरौ गतिं पश्यत न. कुतूहलात्, कथं वृषा मुञ्चत भूतले समे[1] ।
इतीव चाट्टकिवृतग्रणं मुखे, वृषा न्यधुर्वेगति सारथौ पुरः ॥ ४३
नयेन सद्वस्य रसातलं यया, कथं समाकृष्यत साऽपि निम्नदे (?) ।
नवीनचुल्लीविवरापदेशतः, खनन्ति भूखण्डमिति स्म किङ्कराः ॥ ४४

१ क-ख पुस्तके ४४ तम काव्य नास्ति ॥

प्रवृत्तनृत्ता प्रेमचलोर्मिपाणिभिः, प्रणीतगीता यमलाद्यषट्पदैः ।
तदा व्यधु स्वागतमागता जनं, विदम्भसम्भ प्रसरेण सिन्धवः ॥ ४५
तदाऽनपाकाय विकाशितशिखी, नभस्वत् वमौ सद्धजन निवासिनि ।
भरातनमन्द्रभिमिदास्फुटस्फुरत्फणी बहुड्डामणिरश्मिराशिवत् ॥ ४६
अथैष तीर्थङ्करदेवतास्य प्रमन्न्नमव्यादिनपूजनो जनः ।
मुदा नमस्कृत्य गुरुक्रमद्वयं, प्रचक्रमे शाश्वतकृत्यकर्मसु ॥ ४७
अदायि दानाय तदा धनं तथा, मनोरथार्तिमनेन मन्त्रिणा ।
यथा परे निश्चयवायिनो जना, वनीपकानामपि चाटु चक्रिरे ॥ ४८
स्वयं स कस्मैचन मोदकादिकं, घृतादि कस्मैचन शुद्धवासनः ।
फलादि कस्मैचन साधवे ददत्, तदा विशश्राम न मन्त्रिशेखरः ॥ ४९
अकिञ्चनः कश्चन याचते क्वचित्, किमहो ! शब्दमिति प्रदाय स ।
चकार भोज्यादिकमात्मना कृती तृतीययामक्षणपूरितेक्षणः ॥ ५०
अथ कृततनुकृत्य कौतुकोत्तानचेता, जिनपदमनुसङ्घ कल्पसङ्घन्मागात् ।
इह महमहिमाशुद्दैप्तकामो निकामं, गगनगमनविन्न प्रययद्दौ निषण्णः ॥ ५१

किञ्च—

पायं पायमहर्निशं रिपुयशःपीयूषपूरं भवान्,
कम्पायुः क्षितिकल्पवृक्ष ! भवनाद्वर्णमिल्लतालिङ्गित ।
श्रीसोमान्वयसोमनौक्तिकमथैरेव प्रसूनैरपि,
त्वत्कीर्तिप्रकरैरपि त्रिभुवनं सौरभ्यमभ्यस्यतु ॥ १
मायमायमरं [1] नाम्बरे यश, श्रावसन्त ! तव सन्ततस्मितम् ।
इयत्यमहिमानमानरो मानसाश्रयमहो ! महायसाम् ॥ २
सैमुच्छिनाभि खलु वस्तुपाल प्रतापदीपाञ्जनमञ्जरीभिः ।
इहोपकण्ठस्थितिभाजि शङ्के, माशिक्यमुन्मीलितमुत्वन्ऽपि ॥ ३
श्रीवस्तुपालप्रथितप्रसादासादन् प्रमोदामृतवारयो या ।
एतत्प्रबन्धच्छलतोऽरिसिंहस्ता एव मूर्ता स्तबकीचकार ॥ ४
प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते। इमा यत्न चत्वारि, काव्यान्यमरपण्डितः ॥ ५

**॥ इति सुकृतसङ्कीर्तननाम्नि महाकाव्ये सङ्घप्रस्थानो नाम पञ्चमः सर्गः ॥ ५ ॥**



१ ग प्रतौ ॥ २ ग-समुत्थता ॥

अवतमसततीना मृत्युकालेऽपमृत्यु, कुवलयवलयाना जीवित पङ्कजिन्या ।
अलमकृत नभोऽङ्कं कोकलोकस्य सीता विरहितहरिशापानुग्रहोऽय ग्रहेश ॥ ३१
दयितमिति पुरस्ताद् वीक्ष्य भानु युवान, हरिहरिति हरिद्रारागमाग प्रकोपात् ।
स्फुटकमलमुखेभ्योऽमोचि नि श्वासधूमा वलिरलिनिकुरुम्बच्छद्मना पद्मिनीभि ॥ ३२
अजनि गिरिनितम्बे निम्बमर्कस्य धातु च्छुरितमिव सराग सूर्यकान्ताग्नितप्तम् ।
करजलपरिधौत चुम्बित चाम्बरेण, क्षणघटितसुवर्णादर्शवद् दिग्वधूनाम् ॥ ३३
सममसममयूखैर्भानुमन्त लसन्त, गिरिशिरसि विलोक्याऽऽलोकनीयप्रभावम् ।
स इव सचिवभर्ता सङ्घलोकेन साकं, विमलगिरिगिरोऽग्र गन्तुमभ्युत्सुकोऽभूत् ॥ ३४
सद्यो जिनक्रमनमस्कृतिलोलसङ्घ सङ्घट्टलोलवसुधातलसम्भ्रमेण ।
श्रीवस्तुपालगुणहृष्ट इवाचलोऽपि, शत्रुञ्जयः स्वयमकम्पयदेष मौलिम् ॥ ३५

किञ्च—

नित्य त्वद्वदनारविन्दसदन वाग्देवता सेवते,
　　त्व पद्माश्रयभासुरोऽसि जयति त्रैलोक्यसूत्र त्वयि ।
श्रीमच्चण्डपगोत्रमण्डन ! गुणैरभिर्भवान् ब्रह्मण,
　　साधर्म्यं वहति प्रियवद ! मदाशार्मिस्तदायुर्भव ॥ १
अलभत बत ! यस्मिन् सान्द्रदारिद्र्यपूर्णे गृहपतिरवकाश न प्रदोपक्षणेऽपि ।
वितरति सति वित्त वस्तुपाले कवीना मिह गृहकुहरान्तर्नैष रत्नाकुलेऽपि ॥ २
श्रीमन्त्रीश्वरवस्तुपाल ! भुजयोर्युग्मेन युद्धार्णव,
　　तूर्णं निस्तरतोऽपि ते समभवन्न व्याकुलत्व किल ।
यद्गादवगण्य निर्मलगुण शङ्ख त्वया मौक्तिक
　　स्तोमानामिव धैर्यधुर्य ! यशसा चक्रे महान् सङ्ग्रह ॥ ३
श्रीवस्तुपालसचिवेन्द्रयश प्रसून-माल्येऽरिसिंहकविना गुणगुम्फितेऽस्मिन् ।
कण्ठे सदा लुठति निर्मदुर्जनाली-वक्त्रप्रभा कति न बिभ्रति भृङ्गभावम् ॥ ४
प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये सूर्योदयवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥



शैलमौलिगमनाय मनोऽथै-र्भ्राजमानमसमानविहारैः ।
प्रापदस्खलितमप्यसमेषु, द्राग् मनोरथरथं पथि सङ्घः ॥ १
भूरिधातुमयजङ्गमशृङ्ग-श्रेणिवद्विविधचीरविचित्रः ।
मन्दमन्दमथ सङ्घजनोऽसौ, सञ्चचाल गिरिराजतटेषु ॥ २
मञ्जुलैः कनककुण्डलकान्तैः, स्त्रीमुखैः सरवि सोमशताभैः ।
एकभानु-हिमभानुमनोज्ञं, मेरुमप्यजयदेष गिरीन्द्रः ॥ ३
अञ्चलैः शशिमुखीवसनानां, चञ्चलैः कटकसीमनि शैलः ।
सङ्घसङ्ग सुहृत्तामृतसेका-दुद्गतप्रथमपक्ष इवाभात् ॥ ४
आन्तरेण नयनेन जिनेन्दो-राननेन्दुरुचिपानपराणाम् ।
अप्युदारगिरिशृङ्गविलासे, न श्रमः समजनिष्ट जनानाम् ॥ ५
नाम नामसुधया जिनभर्तुः, प्राशया जनमुखेषु न तृष्णा ।
दूरवर्तिनि मुखामृतकुण्डे, लोचनानि तृषितानि जनानाम् ॥ ६
प्राग्नियोजितमनोहततीर्था-धीशपादकमलाङ्कितमौलिः ।
शैलसानुषु जनो न तदानीं, तापमाप तपनांशुततिभ्यः ॥ ७
क्रमागतेन लघुकं यददर्शि, क्षोणिभृच्छिरसि तेन जनेन ।
उच्चकैर्विचरता ददृशे तत्, सङ्घसङ्गममदादिव पुष्टम् ॥ ८
देवभक्तिभरनिर्मितहस्ता-लम्बनव्यतिकरेण मनोऽयम् ।
आसदद् गिरिशिरास्यतिहर्षा-न्मङ्क्षु सम्मुखमिवागतवन्ति ॥ ९
अद्भुतप्रमदशालिषु शैलः, शेखरस्थितिषु तेषु जनेषु ।
भूतिभर्त्सितमुखेषु स रेजे, मेरुवन्नरविच्छविपिङ्गः ॥ १०
कर्मवैरिविजयाय सतेजा, नाभिभूपदनखांशुविचित्रम् ।
आरुरोह सचिव- शुचिदन्तं, दन्तिराजमिव तं गिरिराजम् ॥ ११
वीक्ष्य यक्षमिह सङ्घजनौघ, श्रीकपर्दिनमथाब्धिरिवेन्दुम् ।
क्षुभ्यति स्म चतुरः स चतुर्धा, विस्तृतस्तरलहर्षतरङ्गः ॥ १२
अन्तरायदलनाय जनौघं, तीर्थसेवनकृतेऽभिपतन्तम् ।
द्रष्टुकाम इव वर्त्मनि दूरा-दारुरोह गुरुशैलशिरो यः ॥ १३
भावनासलिलशालिनि शश्वत्, तीर्थनाथपदपद्ममनोज्ञे ।
मानसे तनुमतां विलसन् यो, हंसवत् सृजति कामपि कान्तिम् ॥ १४
यक्षपुङ्गव ! स भवान् भुवनैक-त्राणकारणमकारणबन्धुः ।
वत्सलेव जननी जनमेनं, नाथ ! पालयतु बालमिव स्वम् ॥ १५

१. क-ख-°तटेषु ॥

श्रीकपर्दिनमिति स्तुतिपूर्वं, यक्षराजमभिपूज्य सहर्षम् ।
आशु सङ्घपतिरेष ससङ्घस्तीर्थनाथनमनार्थमचालीत् ॥ १६
उत्सुकैरथ जनैर्जिनचैत्यं, वीक्ष्य मङ्क्षु पथि गामिव वत्सैः ।
व्यक्तशक्तिरभसत्रुटितोच्चैः-कर्मबन्धतरलं प्रदधावे ॥ १७
सञ्चरन् भुवि न माति जनो यः, स्फूर्तिसङ्कुचितमूर्तिलनोऽसौ ।
द्रष्टुमाश्यनलिनं जिनभर्तु-श्चैत्यधाम्नि स ममौ सममेवः ॥ १८
दन्यमानमसमानविमर्दं, हृद् हृदा ननु मिथस्तनुभाजाम् ।
आत्मगङ्गभयमङ्गुरसत्त्वै-स्तारिभिरमोचि तदानीम् ॥ १९
पापपङ्कशमनाय जनानां, स्नानमन्तरकरोद् ध्रुवमात्मा ।
रोमवर्त्मसु जलेन विमर्दे, स्वेदपूरमिषतः प्रसृतं तत् ॥ २०
आबभौ घनघनाघनलक्ष्मी-रङ्गिनां प्रमदरोमविकारः ।
अन्तरस्थितजिनेन्दुरुचिश्री-निस्सरद्दुरितवामसतुल्यः ॥ २१
लोचनैस्तनुभतामिति खिन्नैः, प्राप्य जैनवदनामृतकुण्डम् ।
आशु वल्कलसवनैरिव रेजे, सम्मदेन विगलज्जललेशैः ॥ २२
तत्र तादृशि जनस्य विमर्दे, शक्यते भ्रमयितुं न करोऽपि ।
वीक्ष्य विश्वविभुमेनमनृत्यन्, भाविनो यदि मुदा मनसैव ॥ २३
स्वीयतादृशविमर्दसुदूर-क्षिप्तसूरकिरणः किल लोकः ।
रत्नभूषणविभिन्नतमिस्रो, भक्तिकृत्यमकृत प्रभुचैत्ये ॥ २४
धूलिधूसरपद एव तदानी-मागतो जिनपतिं प्रणिपत्य ।
दूरपूरितमनोरथवेग, स्तोतुमारभत मन्त्रिवरोऽसौ ॥ २५
त्वद्गुणान् गदितुमीश ! समग्रान्, न स्वयं सुरवरोऽपि समर्थः ।
गोचरोऽप्यसि न मादृशवाचां, मौनमेव हि तव स्तवहेतुः ॥ २६
त्वां निरर्थकगिराऽपि तथाऽपि, स्तौमि विश्वनुत ! मुग्धतयाऽहम् ।
प्रीतये निजशिशोः स्फुटलाला-न्मासि लल्लरवचांसि गुरूणाम् ॥ २७
न क्षमोऽयमहितानपि हन्तुं, स्वं कुटुम्बकमय च मुमोच ।
जल्पिता जिन ! परैरिति दोषा, प्रत्युत स्तवनतां तव जग्मु ॥ २८
भाषितं भुवनभूषण ! भित्त्वा, कर्म निर्ममपते ! भवतेदम् ।
श्रूयते त्वदभिधाऽपि कदाचिद्, यत्र तत्र न करोति निवासम् ॥ २९
नाऽऽप्नुवन्ति भवबन्धनिकेता-द्ग्रतस्तव गतस्य पदं ये ।
भ्रम्यते भ्रमवशाज्जिन ! मुक्त्यै, तैर्वृथैव पृथिवीवलयान्तः ॥ ३०

त्वं मनोभवमपास्य पुनस्त्वं जन्मभीरसुच स्वमनोऽपि ।
किं हरन्तु हरिणीतरलाक्ष्य स्तावकं तदमनस्ककिरीट ! ॥ ३१

प्राप्य रत्नमिव पुण्यपयोधे-स्त्वां हृदि प्रणिदधाति जनो यः ।
स प्रयाति पुरुषोत्तमभावं, पश्य न स्वपिति किन्तु भवाब्धौ ॥ ३२

यामवाप्य न नमामि भवन्तं, तां न निर्वृतिमपि स्पृहयामि ।
त्वत्प्रसादवशतस्त्वयि भक्तिं र्भानु मे जिन ! भवेऽपि भवेऽपि ॥ ३३

निर्मितस्तुतिरिति प्रतियातः, कृत्स्नमेष सुकृती कृतशौचः ।
स्नानहेतुकलशान् घुसृणाम्भः-पूरितानयमचीचलदिन्द्रैः ॥ ३४

श्रावकाः प्रतिपदं हृदयाग्र-न्यस्तहस्तधृतकाञ्चनकुम्भाः ।
निस्तरीतुमिव सप्ततिसिन्धुं, कुर्वते स्म निरपायमुपायम् ॥ ३५

शुद्धसद्मपतिकीर्तिलतानां, विष्टपत्रितयगर्भगतानाम् ।
आतपत्रपटली विमलश्री-रादिकन्दवदिव विरराज ॥ ३६

अत्युदारतरनर्तनभावै-रुत्सवेन महता प्रहताघः ।
प्राप मन्त्रितिलकः किल कर्म प्वसिनो जिनपतेरथ चैत्यम् ॥ ३७

कुङ्कुमाम्बुभिरसिस्नपदीशं, श्रावकैः सह यथाविधि मन्त्री ।
तैर्विधौतमनुरेप तदाऽभूत्, पर्वतो विमल इत्युचिताह्वः ॥ ३८

अङ्गमण्डनमखण्डनमासीन्निर्मितं मृगमदैर्जिनभर्तुः ।
वल्कुसन्नहनसन्निभमुच्चैः, कर्मकूटरिपुकोटिजयाय ॥ ३९

भूरिपुष्परचिता जिनभर्तु-र्लम्बिता कृतिभिरर्चनमाला ।
अग्रभूष्णव इव स्मरमुक्ता, भल्लयो वपुषि भूषणमासन् ॥ ४०

तैस्तथा जिनगुरुस्तिमिरैरपि निर्मितेऽथ घुसृणधूपकधूमैः ।
सस्पृहेव सचिवं सुकृतश्रीः, कौतुकादभिससार यथाऽसौ ॥ ४१

आरात्रिकं कृतमथ प्रथमस्य तीर्थ-भर्तुः पुरः स्फुरदुरुद्युतिचक्रवालम् ।
उच्चावचप्रसरणैर्निजधाम सद्म-दीपद्विपं कुसुमवृष्टिविराजमानम् ॥ ४२

इत्थं प्रेक्षणकक्षणाहितमना सम्पूज्य विश्वत्रयी
पूज्यं नाभिसुतं समाप्य च तथारूपामिहाष्टाह्निकाम् ।
मन्त्रीशः प्रतिलाभितव्रतिततिः शत्रुञ्जयोर्वीधरा
दुर्त्तीर्णे कृतमङ्गलः समजनि श्रीनेमिसेवोत्सुकः ॥ ४३

किञ्च—

शौर्यैर्वज्रधरस्य दैत्य-भरतामाचार्ययोः प्रज्ञया,
दानैर्देवगवी-मणि क्षितिरुहां स्वर्गाधिरं गर्वितः ।

एकेनैव विभूषणेन भवता श्रीवस्तुपाल ! क्षिति-
स्त्वं निर्जित्य मुदा तवाऽऽशिषमदादेवं मेदायुर्भव ॥ १

कल्पान्तोद्भ्रान्तभास्वत्करनिकरनिभो विभ्रमन्तः समन्तात्,
सन्तापस्त्वत्प्रताप-ज्वलदनलभवः केन शक्येत सोढुम् ? ।
मन्त्रिन् श्रीवस्तुपाल ! त्रिजगति यदि ते कीर्त्तिलेखैव न स्या-
दन्तःपीयूषपेया बहिरपि च मुहुश्चन्दनोद्वर्त्तनानि ॥ २

मासि दौस्थ्यतरुखण्डखण्डनै-र्वस्तुपाल ! भुवि दानिकुञ्जर ।
चित्रमत्र किमु शत्रुमर्दनं, यत् त्वया क्रमणलीलया कृतम् ॥ ३

काव्यमेतदरिसिंहनिर्मितं, सर्वतोमुखतयैव रङ्गभूः ।
वस्तुपालसचिवेन्द्रकीर्तिभि-र्नर्त्तकीभिरिव यत्र नृत्यते ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

## ॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये शत्रुञ्जयदर्शनो नाम सप्तमः सर्गः ॥ ७ ॥



सचिवः समं सपदि सद्वजनै-रथ देवपत्तनमगान्नगरम् ।
प्रणनाम कामजयिनं नयन-प्रियमिन्दुलाञ्छनमिहोत्रमहा ॥ १

विधुमौलिमौलिविधुधामभरै-रिह मे भविष्यति सदाऽभ्युदयः ।
इति पाथसामसुमसुत्र पतिं, कृतवासमैक्षत स मन्त्रिपतिः ॥ २

इह सोमनाथमुकुटोल्लसितैः, सरिदम्बुभिर्विधुविभाभिरपि ।
सततप्रवृद्धविहरल्लहरी-निवहध्वनिध्वनितदिग्वलयम् ॥ ३

सततान्तरालशयविष्णुवपु-र्विभवर्द्धिमाभिरिव मेचकितम् ।
उदयत्तदीयशयनीयफणि-स्फुटरत्नरश्मिराशिनिभफेनधरम् ॥ ४

सलिलेन विश्ववलयप्रलयः, समये मयैव रचनीय इति ।
मुहुरीरितापद्वतवीचिभरै-र्जनयन्तमन्वहमिहाभ्यसनम् ॥ ५

पुरुषोत्तमो हृदि मदीयसुतः, गिरसीधरोऽपि विदधाति सदा ।
प्रमदादुदारतरगर्भमिव, प्रकटं नटन्तमिव वीचिकरैः ॥ ६

अयि वज्रभाजि कुपिते चुपतौ, द्रुतरक्षणं क्षितिभृतामभितः ।
स्फुरितोर्मिबाहुमिति कीर्तिततो-र्जगति क्षिपन्तमिव फेनमिषात् ॥ ७

१ ग-महायुर्भव ॥

नयनामवर्त्मनि परिस्फुरतीं, दुरितान्धकारपटलीं विकटाम् ।
दलयन्ति मे त्रिजगदीश ! कदा भवदीयपादनखदीपशिखाः ? ॥ २३

भुवनैकनाथ ! भवदीयवपुर्विपुलप्रभापयसि मग्नमपि ।
द्वितयं कदा नयनयोरिह मां, हिमहारतारगुण ! तारयति ॥ २४

तदपीयत श्रुतिपुटेन यदा, सततं विषण्णहृदिवपद्धदि ते ।
भवदङ्गदीप्तिममुना यमुना-जयिनीं धयामि नयनेन कदा ? ॥ २५

नलिनादिपुष्पनिवहेन सुरै-र्यदपूजि पादयुगमीश ! तव ।
जिन ! तेन पङ्कजनिभेन कदा, जनयामि पूजितमिवाऽऽत्मगिरः ॥ २६

इति गद्गदाश्रुपुलकाकुलित, कलयन् मनोरथमनन्यमनाः ।
सचिवः शिवातनयमात्तनयः, क्षणमेकमैक्षत पुरोगमिव ॥ २७

अथ कल्पिताखिलविभातविधि गिरिमारुरोह सह सद्गजनैः ।
सचिवो जिनक्रमनखेषु पुरोगमितेन दृष्ट इव मङ्क्षु दृशा ॥ २८

तदनु प्रमोदरभसेन रजःलुतपाद एव विननाम जिनम् ।
अपि चैष नेत्रगमिताक्षणप्रसरक्षणं निभृतमीक्षितवान् ॥ २९

रचिताङ्गशौचविधिरिन्द्रिगणैः, सहितो जिनस्नपनहृत्तुरथ ।
जिनभक्तिरागमिव मूर्तमसौ, कलशेषु कुङ्कुमजलं न्यदधात् ॥ ३०

अथ केऽपि भक्तिभरभासुरिता, स्फुरिता जिनस्य पुरतः परितः ।
स्वयमुत्सवं विदधिरे मधुरध्वनिगीतिरीतिमयवाद्यमयम् ॥ ३१

वदनाग्रभागगतपाणियुग-स्थितभेरिदण्डमिपदन्तकरः ।
गुगुमे करीन्द्र इव मन्द्ररव , किल कोऽपि पापतरुपातपटुः ॥ ३२

अपरः पयोदरववादभव-निनदं मृदङ्गमपि वादितवान् ।
ननृते दरद्दुरितमोगिशतैः, कृतिनां मनोनयमयूरकुलैः ॥ ३३

अपरस्य वंशमपि वादयतो, मधुरस्वरैः प्रमदिनां रतिनाम् ।
यदमीलि परपुटकेन रसात्, तदवैमि कर्ण इव नेत्रयुगे ॥ ३४

अपरः पिबन्नपि शिवातनुभू-वदनेन्दुदीधितिसुधा स्थिरदृक् ।
मृदमुज्जगार जनयन् जनताहृदि सम्मदं ललितनर्तनमिषात् ॥ ३५

चटुला नटी सरसहावरसा-दिह रत्नभूषणगुभा गुगुभे ।
कुलदेवतेव तडिना तरला, जलदप्रवृत्तेर्जिनसेवनतः पुनः ॥ ३६

इति सम्मदेन जिनमज्जनपर्व, पुरगाम्युनि दर्शयति स तथा ।
करिणो यथाऽधमपि रैवतकः किल दर्शयन्सरसो दद्दशे ॥ ३७

स्वहृद प्रमोदविद्यदस्य रसात्, परमाणुभि पुर इव प्रसृतै ।
सचिवेन सारधनसाररसैर्नवमङ्गमण्डनमकारि विभो ॥ ३८

कुसुमायुधस्य कुसुमानि मनागपि सम्मुखानि नहि यत्र ययु ।
इह तानि तीर्थकृति सङ्घटयन्, स बभौ कृती मदनतोऽप्यधिक ॥ ३९

यमुनौघसङ्गमधिया सचिव प्रथितऽथ धूपमयधूमभरं ।
प्रमदेन तत्क्षणमकारि नभ सरिदम्बुनि द्युनिनि सवनम् ॥ ४०

अथ तामस कवचित्त चलिता ज्ञनरैतवन मग्नमुदिरता ।
नवदीपिकापरिकरेण चिर, निरराज यज्जिनमय सचिव ॥ ४१

स्फुटमष्टकर्ममथनोऽर्यामिति, प्रथयन्निहाष्टदिवसानि महम् ।
स्वयमष्टमूर्तिमुरुबिन्दुसम, सचिवोऽष्टमु न्यधित दिक्षु यश ॥ ४२

सचिवस्य दास इव गन्धजितो, जगवाह एष गिरिमूर्ध्नि वहन् ।
न ववर्ष सद्धजनतार्चितभयात्, त्रुटिताम्यपूरि सलिलानि पुन ॥ ४३

देया स्वामिन् ! पुनर्म सुरतपुरपुरोढौकनानीति जल्प-
न्नानन्दस्यन्दसारैरिव घटितमना नेमिनाथं प्रणम्य ।
नाम नाम निकाम विधिवदनिधुर मन्त्रिमान्योऽप्यमस्या
न्मान्यस्यमुप्यानापि पुलकवपु पर्वतादुत्ततार ॥ ४४

अथ गिरीशतटीषु मनीषिणां, परिवृढः परिपूर्णमनोरथः ।
षडपि तत्र ददर्श ऋतून् कला-शुचिरयं चिरयन्त्रितविभ्रमान् ॥ १

प्रकटितायसकर्त्तरिका मधौ, मधुसखस्य भटा इव किंशुकाः ।
भ्रमरसङ्गसितेतरविस्फुरत्-सुमनसो मनसो ददते मुदम् ॥ २

इदमभूद् दलयन् नलिनीः प्रियाः, मम मह-परिखण्डनहेतवे ।
इति हिमस्य भिदामहिमद्युतिः, स्म तनुते तनुतेजितविष्टपः ॥ ३

स्मरशिखी तनुमानिव चम्पकः, कुसुमितो मधुपावलिधूमितः ।
दहति काननसीमनि काञ्चन-च्छविरहो ! विरहोषितयोषितः ॥ ४

स्मितसरोजमुखीमुखवासना-सुरभिमद्यविशेषितसौरभम् ।
परिहृतापरवल्लिमधुव्रती-धवकुलं बकुलं प्रति धावति ॥ ५

सुमनसां त्वमसि स्थितिभूस्त्वया, जयति विश्वमसौ कुसुमायुधः ।
मधुमितीह रसालरसालसा, पिकवयः कवयः कथयन्त्यमी ॥ ६

स्मरनृपस्य चरत्वमुपागता, द्विजचया मधुरध्वनिशालिनः ।
मधुलिहः सुमनस्सु ददुः पदं, तिलकजालकजातविभूतयः ॥ ७

दधुरनङ्गनिषङ्गतुलामथो-मुखगिलीमुखराजिविराजिताः ।
स्फुटविकाशमुखाः कमलाकराः, न पथि कं पथिकं प्रति भीतये ॥ ८

स्तुतगुणं कुतुकेन मधुव्रतै-रिव रचाकुलितैः सुमनोमयम् ।
मधुसखाय मधोर्विनियोगतः, शरचयं रचयन्तितमां लताः ॥ ९

व्यथयति प्रथितारुणतेजसो, दहनमन्त्रमयादिव शब्दतः ।
मधुसखोऽयमशोकलताल्लसत्-कुसुमतोऽसुमतो विरहातुरान् ॥ १०

मलयजद्रुमसङ्गिभुजङ्गम-स्फुरितफूत्कृतिसम्भ्रमसम्भृतः ।
पथिकलोकदृशां मलयानिलः, सुविषमो विषमोहमिव व्यधात् ॥ ११

कमलकोमलकोशकुचोन्नतै-रलिकलालिकशासितसम्पदः ।
व्रततिकातनिकायवनश्रियो-ऽधिकमशोकमशोभत फाल्गुनः ॥ १२

कमलकान्तिहरीं कृशतां नयन्, सह हिमाद्रिदिनेन विभावरीम् ।
कमलबन्धुकृतोन्नमनो बभौ, शुचिरयं चिरयन् दिवसश्रियम् ॥ १३

द्रुतसमेतदिनाधिपतिप्रभा-परिगलत्तरशीतनभीरुणा ।
अनिलकोलशिरीषरजश्छलाद्, द्विरदनाल्लक्ष्यो मधु ॥ १४

अहनिहारुणभासि सितेतरो, हन्त ! विभाम्यत्र सितच्छवी ।
भ्रमति भृङ्गयुवा नवपाटले, विचकिले च विभर्ति मुहुर्मुहुः ॥ १५

१ ग-पथिकलोक°

तरलतारलतागृहपङ्कजच्छदनचन्दनचन्द्रमरीचिभिः ।
तपनतापनताकृतिरप्यसौ, रतिवरोऽतिवरोरुषु जृम्भते ॥ १६
नभसि दर्पणतुल्यतडिल्लता, जलदपङ्क्तिरङ्गतडम्बरा ।
मदनसैन्यगजव्रजवद् बभौ, कृतरवा तरवारिसितेतरा ॥ १७
वियदमीमिलदर्कनिशाकर-द्वयमये नयने भयतो मृहाम् ।
यदतुला तडितं घनमालिका विकरवा करवालमिवाक्षिपत् ॥ १८
यदयमेतदवाप्य तपस्विना, हृदि हतोऽपि जिजीव मनोभव ।
अपि भुजङ्गभुजा शुशुभे सुधा-ध्वचन वचन शिखिना तत ॥ १९
मदमिवर्धितसिन्धुमहीरुह-व्रजविशोषकमेतदिति क्रुधा ।
अधिककर्ममह सहमा घनै, कवलितं वलितं तडिता मिषात् ॥ २०
अपरता परतापकृकण्टिका-हृतककेतककेलिषु षट्पदी ।
अमलकोमलकोरकसौरभस्थितिषु जातिषु जातरसाऽभवत् ॥ २१
मलकुलोलमधुव्रतमञ्जुलाऽम्बुजमुखी जघनोच्चलसैकता ।
शरदि हंसरवेण समाश्रिता, धृतरसा तरसा तटिनीवधू ॥ २२
क्वचन भर्तरि याति तपात्यये, घनघटाश्रुजलानि मुमोच न ।
विरहरुद् दधती तपनव्यथा प्रदममन्दममङ्गलशङ्कया ॥ युग्मम् ॥ २३
पदमधत्त गतस्य पयोमुच, सुहृदयं यमसौ शिखिना गज ।
गलितपत्रमयातपवारणैररिमिव विभवं महसा क्षिपन् ॥ २४
समुदिते मुदितेऽम्बुरुहि प्रिय कुवलय वलय सरिता तथा ।
अभूत सम्भृतसम्पदयं यमाच्छविमल विमल च विधुर्मह ॥ २५
खरुचिर्विजयाय निजद्विप, सहसि साहसिकीं रिमावरी ।
प्रतिदिनं परितः परिवर्धितो रमहिमा महिमानमुपाययौ ॥ २६
तुहिनमन्दतरा मलिनभ्रमिनी-मलिनि भुवनि रागपरामपि ।
करिकाभिरहो[1] शतपत्रिका, सह सितं हसितं परितन्वते ॥ २७
पदमकारि मुखं सुदृशां सदा, विमलकान्तिनि कुङ्कुमसङ्गिने ।
हिमरुचः कमलस्य च सम्पदा, हृतनिकामनिकारनिनुन्नया ॥ २८
तुहिनवाहिनया हनुवातभी-द्रवितकुचितकुङ्कुमकैतवात् ।
परतनूरतनूष्मणि भास्वरा-तपनति घनति स्तनमण्डल ॥ २९
हिमभरस्य तपःप्रविनोन्नत-घनमहीन्द्र इव मुञ्चो नृप ।
निजरिपराणि निर्गमनायम, दिनकरो न करोति कथञ्चन ॥ ३०

घ अपि भु ॥ २ एतत्पद क-ख पुस्तकयोनास्ति ॥

पुलककम्पितसूक्तिभिः परि-ष्वजनकर्म दिशन् हरिणीदृशाम् ।
हिममयः पवनो ननु कामिना-ममितकामितकारणतां ययौ ॥ ३१
पथिककाननजन्ममनोभव-ज्वलनसम्भवधूमभरोपमम् ।
नवलवङ्गरजः पवनाहृतं, जगति रङ्गति रङ्गितषट्पदम् ॥ ३२
दिनमयं नमयन् सहसा कृत-स्मरजनी रजनीः परिवर्धयन् ।
विरहितारहितासु सुखोर्मिका-रसमयः समयः शिशिरो मृशम् ॥ ३३
सततकुसुमितान्तृतूनशेषा-निति समकालमिहावलोक्य मन्त्री ।
अधुनुत विदितप्रभुप्रभावा-तिशयविचारचमत्कृतः किरीटम् ॥ ३४
शैलेऽस्मिन् पुरुहूतपौरमिथुनैर्मन्त्रीशनिर्मापित-
श्रीमन्नेमिजिनेश्वरोत्सवभवत्कौतूहलाकारितैः ।
रन्तुं नित्यषडृतुभूतिविभवद्वल्लीभवल्लीलया,
सानन्दैरतिमन्दनन्दनवनीमुक्तस्पृहैः सस्पृहे ॥ ३५
कुसुमावचायमनसां श्रवणे, सुरयोषितामथ सरोजजुषि ।
कुसुमादुपेत्य निभृतध्वनयो, दधतीव भेदमलिनो मलिनाः ॥ ३६
वयमेव शस्त्रपदवीं गमिता, मदनेन सम्प्रति किमेभिरिति ।
अवचिन्वते स्म कुसुमानि तदा, रमणैः समं सुरकुरङ्गदृशः ॥ ३७
नववृक्षमूर्ध्नि यदकारि तप-स्तपनातपेन धृतरागभरैः ।
तरुणीकरग्रहणपुण्यफल, नवपल्लवैरिदमलाभि ततः ॥ ३८
नवपल्लवा निजविभूतिहृतो, वनवर्तिनः स्फुटमशोकजुषः ।
परिकम्पिनो हठवशादरुणै-स्तरुणीकरैर्विभिदिरे रभसात् ॥ ३९
कुसुमार्पणेषु रमणः सुदृशा, प्रथितेऽन्यनाम्नि लघुतां गमितः ।
हृदयात् तदान्वितस्नेन सह, श्वसितेन तूलवदकर्षि बहिः ॥ ४०
ददता प्रसूनमपराभिधया, दयितेन वज्रनिभयाऽभिहते ।
हृदि मानिनी ननु विधाय दृशं, सजलामवागतनुत श्वसितम् ॥ ४१
उदितं प्रियेण निभृतं चतुरा, परगोत्रमश्रुतवती च रहः ।
तदुरस्थपुष्परजसि श्वसितं, व्यथिताधमधु च तदुड्डयने ॥ ४२
सृजता स्रजं शिरसि पद्मदृशो, मृदु चुम्बता प्रियतमेन परा ।
अपि शेमुषीक्षुधतया न रसाद्, ददृशे परा न तयाऽपि रुषा ॥ ४३
सकलस्वकीयकुसुमस्वहृति-प्रतिपन्थिनीः प्रति मृशं सुदृशः ।
अमुचन् शीलिमुखशतानि लता-, समभूषयन्नहह ! तान्यपि ताः ॥ ४४

अथ काननान्तरविहारभव-श्रवखेदभेदरभसेन ययु ।
दयितै सम मृगदृशोऽम्बुनिधि प्रतिहस्तकं सवनहृतु सर ॥ ४५

तरुणीसमागमवशेन जवात्, किल पल्वलोऽजनि मुदा द्विगुण ।
विलसत्तरङ्गकरकोटिरय, क्षिपन् निजा कमलिनीदयिता ॥ ४६

अतिदूरत सरभस रसभाक्, समुपेत्य लोलविषयव्यसन ।
कुचयोर्विलुठच सुदृशा निलय, प्रययौ तरङ्गनिकर सपदि ॥ ४७

दयितेषु तोयजवनेषु गते, रभसेन यत्र कलहसकुल ।
सरसी रराज सुदृशा वदनै, कुचमण्डलैरपि च फेनभरै ॥ ४८

हरिणीदृशा कलितरागभर, कुचसङ्गमेन परिवृद्धरसम् ।
बुडदम्बुजन्मकपटेन सर, परिमील्यत्यतिसुखीव दृश ॥ ४९

अवलोक्य कोऽपि रभसेन जन, विपरीतलोचनमुदाररस ।
हरिणीदृशा श्रुतिसरोजकृता-ननचुम्बनव्यतिकरो हसित ॥ ५०

अभिषेचनेन नयनप्रसृति प्रसरत्कटाक्षरसतोऽनुपति ।
अपरा सखीं प्रति करप्रसृति च्युतनीरशून्यजलकेलिरभूत् ॥ ५१

द्रुतमुद्गतेऽम्बुजमिति प्रकट, त्रुटितस्य वारिणि करे कमितु ।
विदितस्य वीक्ष्य मुखमस्य नवा, रमणी न किं किमकृत त्रपया ? ॥ ५२

इत्थकेलिरसप्रसन्नमनस स्वर्गौकसो भास्कर,
याते‍ऽप्यम्बुनिधि सर कुमुदिनीबोधप्रवृद्धश्रिया ।
श्रीमन्त्रीश्वरवस्तुपालयशसा शुभ्रे सदैवाम्बर
क्रोडे वैभवपिष्टपिष्टपतय स्तोमेन जग्मुर्दिवम् ॥ ५३

किञ्च—

आस्ते यावदखर्वपर्वतघटा गुर्वीयमुर्वी भरा,
तावन्नन्दतु वस्तुपाल ' जगतापुण्यैरगण्यैर्भवान् ।
येनैता भुजगाधिपल्लव भुजे विन्यस्य नागाङ्गना
गोष्ठीमौनमपास्य श्रुतिरसैराचान्तचित्तोऽभवत् ॥ १

आजन्मापि कृतावृत्ति द्विजपतिं स्व मूर्धनि स्वर्धुनी
धौते धारयते जगत्पतिरसावद्यो गुणग्राहिणाम् ।
सद्य सन्ततमन्वमु यमुभरै पुण्यानि पुष्पा शिरो
नूत्ना दानवतामुभावपि गुणावती यमन्ते गुणी ॥ २

श्रीवस्तुपाल ! रणभाजि भवत्कृपाणे, धाराधरेऽपि परवारणविभ्रमेऽस्मिन् ।
उत्पत्य कोपतरलं सहसा जगाम, खङ्ग्रामसिंह इति स स्वयमेव भङ्गम् ॥ ३

वस्तुपालसुकृतामृतप्रपा, काव्यमूर्त्तिररिसिंहसूत्रिता ।
कण्ठदघ्नरसपायिनः शिरः, कम्पयन्ति किल यत्र कोविदाः ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यकृत चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये षड्ऋतुवर्णनो नाम नवमः सर्गः ॥ ९ ॥



तदनु वदनकान्तिन्यक्कृतेन्दुः कृतीन्दुः, समुदितमदपात्रे पूर्णयात्राभिलाषः ।
इह विहितनिवासः काशसङ्काशकीर्तिः, क्रमितविततकर्मा निर्ममे सद्मभोज्यम् ॥ १

मलयजमयमम्भः पादयोरुत्तमाङ्गे, घनमथ घनसारं चीवरं चारु चाङ्गे ।
यश इव निजमीदृग्रूपमारोप्य तेन, स्वयरसमुपनीताः साधवोऽगाधबोधाः ॥ २

सन्नं यत्र तदापि रत्नकनकस्तोमैरतुच्छाशये,
तस्मिन् यच्छति वाञ्छनाधिकतरं दीनेषु दूरादपि ।
मन्येऽपूरि ततो गभीरिमजितो रत्नानि रत्नाकर-
स्तस्य स्थैर्यनिराकृतश्च करदो हेमानि हेमाचलः ॥ ३

किं सूते कर एव हेमनिकरं श्रीनेमिभक्तिक्रिया-
तुष्टै रैवतकाधिदैवतकुलैः किं वा निधिः पूर्यते ? ।
इत्थं याचकसञ्चयस्य किमपि स्वस्यापि वाञ्छाधिकं,
तस्मिन् यच्छति खेनरेष्वपि चमत्कारश्चकार स्थितिम् ॥ ४

तदानीं दीनौघे मुहुरपि गृहीत्वा बहुतरं, स्वयं निर्विण्णेऽस्मिन् ददद्यमनिर्विण्णहृदयः ।
अहो ! किञ्चित् कोऽपि क्वचिदपि न याचेत वचनं, निरादुर्श्चार्येदं धवलकपुरे गन्तुमुदितः ॥ ५

दुष्कर्माद्रिपविः पवित्रमहिमा नास्यां कदाचिन्महा-
मोहध्वान्तरविः प्रविश्यति भृशं सद्मो महोत्साहवान् ।
इत्थं पापलिपिं विलुप्य करणे भालोपमं वामन-
स्थल्याः पुण्यदिनं चकार सुकृती कुर्वन् प्रवेशोत्सवम् ॥ ६

कर्पूरागुरुधूपधूमपटलैरुल्लिख्यमानैः प्रति-
ग्रामं तीर्थकृतामनेन कृतिना ये जज्ञिरे वारिदाः ।

तैरेव त्रुटिते जल पथि तथा प्रेम्णैव पृष्ट यथा,
सपूर्णानि सरोवराणि न पुन सिक्तोऽपि मार्गोऽनसान् ॥ ७

स्वस्थानप्रसृतस्वनल्लभजनप्राग्भारसघ परा रम्भारम्भपुर प्रसृ चरमनोवेगावक्रष्टैरिव ।
साकं सद्जनै समुच्छ्रितमोभारैस्तदौ सुख्यतो, गच्छद्भिर्धवलक्ककाभिधपुरोपान्त प्रपेदे कृती ॥ ८

स्मेरत्कास्मीरनारच्छुरितपथतया रागमासाद्य सद्यो,
लीलालोलपताकाञ्चलतरलचमत्कारिचञ्चत्कटाक्षा ।
जातक्षोभा पुरीय सविपुलपुलकाकीर्णदूवाङ्कुराग्रै,
प्राप्ते श्रीवस्तुपाले सति सचिवशचीवल्लभे वल्लभेऽस्मिन् ॥ ९

इय सर्वाङ्गीणप्रगुणितविभूषा किल तदा, तदाश्लेष यावत् क्षणमिव पुरी भासुररसा ।
अभूद् त शून्या हृदय इव याते पुरजनै, सम श्रीमन्त्रीश प्रति सरभस वीरधवले ॥ १०

श्रीवीरधवल-तेज.पालाभिधसचिवमध्यग सचिव ।
त्रिपुरपरीतिस्थापितहर इव हरति स्म तत्र मन ॥ ११

भास्वत्त्रिस्थानभेरीमुरजभरजनिध्वानसन्तापभाति-
भ्रष्टाहङ्कारदेवीकृतरभसपरीरम्भसरम्भहृष्टै ।
शक्राद्यैर्देवचक्रैरपि सचिवपति स्तूयमानस्तदानीं,
प्रारेभेऽसौ प्रवेश पुरि पुलकिवपु पौरदृश्यमान ॥ १२

अथ पृथुकमतुच्छैरतदु सन्नयत त्रिभुवनमपि शब्दैरब्दसवादकै ।
नवभङ्गितिविदग्धा मागधा भागधेय प्रगुणितगुणभाज तुष्टुवुर्मन्त्रिराजम् ॥ १३

जय जय नयशालिन्नासमुद्रान्तपृथ्वी वलयमिलितकीर्ते ! मन्त्रिचक्रैकशक्र ! ।
दलितकलिविलास ! प्रस्फुरत्तीर्थयात्रा कृतकृतयुगनव्यप्रस्तुते ! वस्तुपाल ! ॥ १४

बलिरपि कलिकाले याचकालीकराले, यदि भृशमभविष्यद् दानवो दानशौण्ड ।
इति भवदवलोकाद् विष्णुयत्न विनाऽपि, स्वयमयमगमिष्यद् देव ! पातालमूलम् ॥ १५

श्रीविश्रामास्पदमपि मदाद् दासयस्याशु दृष्ट,
स्पष्ट तुष्टो जनयसि जन श्रीविनिद्र दरिद्रम् ।
सामर्थ्यं ते स्वयमिति समालोक्य धाता न सौख्य,
नो दौस्थ्य वाऽलिप ! नृपु लिखति यथाभावनीया ॥ १६

सख्य सङ्गतगौरवै सह सदा कार्यो न कार्य पुन
नीचैरादगनादृश जल्पत पुत्री पुराऽपाठि यत् ।
तस्या त पठनस्य नि शठतया पाठ ददया दधे,
मुग्धा हाटकपट्टिकेव रालिपि श्रीवस्तुपाल ! त्वया ॥ १७

श्रीमन्त्रिमुख्य ! भवदीयविपक्षलक्ष्म दुष्कीर्तिभित्त्रिभुवन परित परीतम् ।
काहं स्फुरामि तव कीर्तिरितीव वस्तु, कर्णोपकण्ठमगमत् पलितच्छलेन ॥ १८

श्रीसोमान्वयवार्धिवर्धनविधो ! मन्त्रीश ! वागीश्वरी
लीलावन्य ! भवानकल्पि जगत साधारणो वेधसा ।
इत्थं दाननिदानवैभवमवद्धालम्बलस्थापितै
रेवैभिर्विभवाक्षरैर्विभवभाग् दु स्थोऽपि सौख्य दधौ ॥ १९

कोपे पावकतप्तमार्गगसम चक्षु क्षिपन्ती पुन,
प्रीतौ मौक्तिकदामसोदरमिव भूरेव मन्त्रीश्वर ! ।
उल्लासान्निधन धनं च ददती प्रत्यर्थिनामर्थिना
मन्येषा किमु चापवल्लिरतुला किं कल्पवल्लिस्तव ? ॥ २०

आदोलयन्ति कृतिनस्तव कर्णदोला लीलासु ये गिरमुदारमुदा रसाढ्याम् ।
भूकल्पवृक्ष ! तनुषे निजमौलिकम्पात्, तेभ्य फल दिवि यश कुसुमान्युदस्यन् ॥ २१

का शक्तिर्बुसदा सुधारुचिरसावेक क्षयी पीयते,
तै पक्षान्तरितोऽखिलैरपि समे निघ्नन्तु दैत्यास्तत ।
अक्षीणस्य सदा त्वदाननसुधाभानो पिबन् वाक्सुधा
मेक सद्म बलस्य वीरधवलो यावन्न सन्नह्यते ॥ २२

असौ ते सचिवावतस ! निबिडाहङ्कारकारस्करा-
वष्टम्भस्थिरपौरुषद्विपमहाकुम्भभ्रम भेजतु ।
कुम्भावभ्रमुभर्तुरुद्दुरहरिस्फूर्जत्करास्फालन-
त्रस्ताऽसौ परिहृत्य नित्यसुखिता विश्राम्यति श्रीरिह ॥ २३

बुद्धिर्लतेव तव विस्फुरिता समस्त शास्त्राम्बुभिरिह भृते हृदयालवाले ।
श्रीवस्तुपाल ! भुवि यत्प्रभवा प्रसून-मालेव मौलिषु न कैरघटि त्वदाज्ञा ? ॥ २४

श्रीसोमान्वयकुक्षिमोद्भूततुलापत्र पतदुर्बल श्रेयोयष्टिरनिष्टविष्टपविष सन्दोहलोहार्गला ।
श्रीविश्रामतरु पराक्रमकरिस्तम्भो रिपुक्षोणिभृद्-दम्भोलिस्तव भाति गूर्जरधरोद्धारैकधुर्यो भुज ॥ २५

अमी भृश सन्ततसञ्चरिष्णु-लक्ष्मीपदालक्तकरक्तकान्ति ।
भवत्कराम्भोरुहवद् विभाति, कृष्णारिनाराचिहुरालिपालि ॥ २६

असन्न सन्नद्धे यदिह विहरन्मार्गणगण स्मरस्मेरं मेरो कटकमटित कपनिटपी ।
इति व्यक्त युक्त सचिवकुलकोटीर ! करज-व्रजव्याजेनाथ मणिमुकुटबन्धस्तव करे ॥ २७

किल जगति भवद्गति विलोक्य, स्वगतियश क्षितिनीरव सुरेभा ।
सचिव ! तव भुजेऽपि भूमिभार, दधति पदात् पदमप्यमी न चेलु ॥ २८

क्रमक्रमऽभ्युदयस्मिन् सेवन्ता देव ! ग्रामे, तव सचिव ! नमन्त प्रीतिमन्त समन्तात् ।
नखदविजयवीर्यांधौतभालस्थदोस्त्या-दरततय इवामी भूतिभार भजन्ते ॥ २९

इति वर्ण्यमानगुणगौर्व्यो रवो-द्रुरवदिग्वृन्दवरभारतीभरैः ।
जिनदवत्तालयपुरस्सर शनै, प्रविवेश पत्तनमसौ महामनि ॥ ३०

अथ त निलोकयितुमाकुल कुल, मुदृशा गवाक्षपदवीषु कौतुकात् ।
अचरत् तदाद्यैकृतमुक्त जग क्रियमाणस्मैतति दर्शितादरम् ॥ ३१

विरचय्य काऽपि मणिकुण्डल श्रुतौ, द्रुतमेकमेव चलिता कुतूहलात् ।
जगदुन्नमाननरुदोऽययसमय-स्वयमागतद्युमणिमण्डला बभौ ॥ ३२

औत्सुक्यभावरतभूषणवैपरीत्या, कर्णावलम्बितमणिश्रितकङ्कणाभ्याम् ।
काचिच्चकार जितकुञ्जरकुम्भशोभे, पीनोन्नतस्तनतटे मुकुटावबन्धम् ॥ ३३

औत्सुक्यत काचन चित्रकार्थं, करे गृहीता मृगनाभिमेव ।
स्निग्धाञ्जनभ्रान्तिवशात् किलैती, नेत्रद्वये तत्र दधौ मृगव्यम् ॥ ३४

वैकल्यमाल्यमिलित शुशुभेऽपरस्या, पक्षान्तरप्रसृमर कबरीकलाप ।
सन्नायत कुसुमकार्मुकसन्निधान, पृथ्वीवरानिव निहन्तुमधादनङ्ग ॥ ३५

ताडङ्कमेक कर एव काचित्, तदा वहन्ती चपल चचाल ।
त्रैलोक्यजैत्रस्मरचक्रवर्ति पताकिनीवाग्रविलासिचक्रा ॥ ३६

आधात् पदे सपाद काचन काञ्चनस्य, हिञ्जीरमङ्कुरितकौतुकमेकमेव ।
सर्वापु स्वकीयविजयध्वजिनीषु विधे, दत्त तु वीरकटक मकरध्वजेन ॥ ३७

कृत्वैकमेव निजमञ्जनमञ्जु नेत्र-माबिभ्रती परमनञ्जनमेव काचित् ।
आभूषित नु सहज नु विशेषहृद्य, जालगता निज विचारयतीव लोकै ॥ ३८

काचित् तदा मन्त्रिवर निरीक्ष्य, कञ्चिद् विभाव हृदये वहन्ती ।
दष्टाधरा पाणिपुटैरुर स्थ, पिण्डीकृत पाटयति स्म हारम् ॥ ३९

काचिद् भुजाभ्या बहिरङ्गभावा च्छून्य यदाऽऽलिङ्गनमाततान ।
अन्तर्गते मन्त्रिवरेऽन्तरङ्ग-भावादशून्य हृदये तदाऽऽसीत ॥ ४०

इत्थ गौरगौरपौरमगीरक्तकटाक्षच्छटा-गुच्छच्छायमयूरपिच्छघटितच्छत्रच्छविच्छादित ।
मन्द मन्दममन्दवन्दिवचनैरानन्द्यमानो ययौ, धन्य सौधमसौ धरातलसुधाधाराधरो धीसखी ॥ ४१

मूर्तानीर्थपतेरथाऽऽश्रयपदेऽध्यारोप्य लोक पुन,
सम्मानोचितचातुरीपरिचित सर्वं विसर्ज्य क्षणात् ।
साक्षाद्दत्तमानपूरितकरप्रेय प्रमिद्धाङ्गना
रङ्गन्मङ्गलवर्धित स गमयामास स्मितो वासरम् ॥ ४२

किञ्च—

तात ! ख्यातगिरः सुता मम हता ही ! कालिदासादयो,
नन्वेकस्तु चिरायुरस्तु जगति श्रीवस्तुपालोऽधुना ॥
मार्कण्डः स्फुटमाशिषा शमवतामल्पायुरप्येष यत्,
कल्पायुर्जयतीति वाग्भिगदने धाताऽस्तु जातादरः ॥ १

श्रीवस्तुपाल ! भवदीययशोऽब्जजस्य, शश्वन्नभोऽङ्गणविहारमनोहरस्य !
सारङ्गसङ्गतकरस्तरवारिधारि-रक्षाभटश्रियमुरीकुरुते सितांशुः ॥ २

सिन्धुराजविजयोज्ज्वलं यशो, वस्तुपाल ! तव चन्द्रवद् दिवि ।
यत्र दुःखपटलीमलीमसं, सिन्धुराजमुखमेव लाञ्छनम् ॥ ३

यत् कवेर्लवणसिंहजन्मन, काव्यमेतदमृतोददीर्घिका ।
वस्तुपालनवकीर्तिकन्यया, धन्यया किमपि यत्र खेलितम् ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मि-न्नरिसिंहविनिर्मिते । इमान्यक्त चत्वारि, काव्यान्यमरपण्डितः ॥ ५

## ॥ इति सुकृतसङ्कीर्त्तननाम्नि महाकाव्ये पुरप्रवेशो नाम दशमः सर्गः ॥ १० ॥



आसाद्य वीरधवलाधिपतिप्रदत्त-श्रीस्तम्भतीर्थनगरप्रभुतामथासौ ।
कीर्तीः क्षितौ तनुमतीरिव कीर्तनानि, कर्तुं समारभत मन्त्रिशिरोऽवतंसः ॥ १

पञ्चासराह्वमणहिल्लपुरीपुरन्ध्री-सीमन्तरत्नमिव पार्श्वजिनेशवेश्म ।
उद्धृत्य येन यशसा जनितो जरत्या, हस्तावलम्बनविधिर्वनराजकीर्तेः ॥ २

श्रीस्तम्भतीर्थनगरे रचयाञ्चकार, भीमेशवेश्मनि च काञ्चनकेतुकुम्भौ ।
मूर्त्तेव कीर्तिरनिशं यदवैजयन्ती, नर्नर्ति यत्र दिवि देवनदी जयन्ती ॥ ३

उत्तानपट्टमज(त)निष्ट पुरश्च भट्टा दित्यस्य मूर्धनि च काञ्चनशेखरं सः ।
तत्रैव दूरतरतापयश प्रताप-भास्करद्वितयसम्भवबीजभूते ॥ ४

भट्टार्कपूजनवने वटकाभिधाने, कूपं व्यधापयदसौ क्षितिनाभिरूपम् ।
दूर्वाङ्कुरप्रकरकर्बुरिताङ्गकुल्या-मार्गापदेशमिलितासितरोमराजिः ॥ ५

अग्रेऽपि तत्र बकुलाभिधचण्डभानो-रुच्चैः सुधामधुरमण्डपकैतवेन ।
स्पर्धीकृतोऽयममुना प्रभवप्रभावो, भूमौ चमत्कृतिकृते स्वयशःशशाङ्कः ॥ ६

श्रीमानखण्डपदमण्डपमत्र मन्त्री, श्रीवैद्यनाथशिवसद्म यदेष चक्रे ।
रोगक्षयाय इतिनां दधदोषधीशं, तत्रावतारमकृत स्वयमेव देवः ॥ ७

उच्चैः पदं निजयशोभरसोदरस्य, तन्वन् स्व तेन विदधे यदशौचभाया ।
तत्र स्थिता तदनुवासरमात्मभासा, विश्वेऽपि वस्तुषु हसत्युपरिप्रतिष्ठम् ॥ ८
अत्रैव साधुहृतयऽद्भुतपुण्यलक्ष्मीनन्दोपम वसतियुग्ममसौ चकार ।
यत्र प्रतिक्षणमहोत्सवहेतुभूता, भूमिश्रमं वहति वदनमालिकेव ॥ ९
आरोहवैभवभृत तरङ्गमिवासौ, कुम्भस्तनीमुभयपक्षगवाक्षनेत्राम् ।
तेन प्रपामपि रसप्रसरप्रसरया, वीक्ष्यैव वामयति मङ्क्षु न निर्वृतिं कः ? ॥ १०
तेन व्यधायि धवलक्कपत्तनश्री लीलावतंसमिवाऽऽदिजिनेन्दुचैत्यम् ।
मुक्त्वाऽपि चञ्चभजनाननपङ्कजानि, यत् पीयते जननिलोचनचञ्चरीकैः ॥ ११
अत्रापि तेन वसतिद्वितय मुनीना, हेतोरकारि सुकृतामृतपानपात्रम् ।
यस्माद् द्विधा प्रसमर शुचिकीर्तिपूरो, विश्वत्रिय श्रयति विस्फुटहारशोभाम् ॥ १२
या कीर्तिरस्य समभूदिह रागकालय भट्टारकालयमसुद्धरणन सिद्धे ।
तस्या भुजङ्गमजगद्गमनाय मार्गं, वापीमिपादयमिहैव कृती वितेने ॥ १३
सा काऽपि कोमलयशोऽङ्कुरवर्धनाय, धात्रीव तेन रचितेयमिह प्रपाऽपि ।
या पूरयेत तृषितेषु तदा च जातमन्येषु केषु न पय कलशस्तनोत्थम् ? ॥ १४
शत्रुञ्जयाद्रिमुकुटस्य पुरो जिनस्य, तेनेन्द्रमण्डपमिद तदकारि किञ्चित् ।
अप्येकवारमधिगम्य जना यदन्तर्जन्मान्तरेऽपि न भजन्ति कदाऽपि तापम् ॥ १५
अत्र व्यधापयदयं नवमुज्जयन्त श्रीस्तम्भनाधिपजिनाधिपचैत्ययुग्मम् ।
तत्केतुकैतवकरद्वितयेन कीर्ती, रम्येन्द्रमण्डपगिराभुवि नृत्यतीव ॥ १६
लक्ष्मीर्यथाऽवलगिता जगदेकभर्तुर्भक्त्या ततोऽत्र लप्स्यत इयमिमा च देवीम् ।
वाग्मूर्तिमत्र रचयन्निति स स्वमेक-माक्रमणीयमपि वाग्मिनमप्यशंसत् ॥ १७
मूर्तीर्विधाप्य निजपूर्वजपूरुषाणा, तेनात्र नित्यरुचिपद्मनिभैस्तदास्थे ।
गा प्राणिता रजनिमाल्यशीलपद्मन्दुरस्था किमेनमपि मुञ्चति साऽपि लक्ष्मी ? ॥ १८
मूर्तित्रय हरिकरिस्थमपूरि तेज-पालस्य वीरधवलस्य तथाऽऽत्मनोऽसौ ।
सन्नद्धसुद्धुरकलिप्रलयाय मूर्तमत्र युगत्रयमिवात्र पावनदेशे ॥ १९
चत्वार्यथ चतुरधीरवलोकना ऽम्बा प्रद्युम्न-शाम्बशिखराण्यवतार्य तत्र ।
तज्जमकीर्तिनिवहस्य चतुर्मुखत्वाद्, धातुः श्रिय निदधतोऽपि बभूव धाता ॥ २०
आलोक्य वीक्षितपुराननभूपभक्त्या चैत्यश्रिया जिनपतेस्त्तमतीवभक्तम् ।
अन्तर्थमल्लततया गिरमीव कल्पसौ, पाणी तदीयकृततोरणकैतवेन ॥ २१
श्रीसुव्रत भृगुपुरादयमत्र मन्त्री वीरं च सत्यपुरत पुरतोऽवतार्य ।
ताभ्या सदा विहितदीपमनोहराभ्या, लोकद्वयीमपि मुदा विशदाचकार ॥ २२

भामण्डलप्रतिनिभिर्विदधे जिनेन्दो-र्यत्तेन तत्र मणि-काञ्चनपृष्ठपट्टः ।
तत्कान्तिभिर्निदलितेषु तमस्सु चैत्ये, दीपा जयन्ति यदि पूजनमङ्गलाय ॥ २३
यच्छातकुम्भमयतोरणकुम्भजालं, तत्राधरीकृतरविच्छवि तेन तेने ।
तेनायमद्रिपतिरुग्रतरप्रभाव:, सम्भाव्यतेऽद्यप्रहरत्न्हदीपदीप्तः ॥ २४
यद्यम्बरे सुरगुरोरिव मे व्यापास्यद, वेधाः स्थितिं तदहमत्र मुहुर्निरीक्ष्य ।
अभ्रंलिहाद्रिपतिमूर्धनि कीर्तनौघ-मेतेन कारितमसङ्ख्यमवर्णयिष्यम् ॥ २५
श्रीपादलिप्तपुरसंनि सरः स चक्रे, यस्यान्तिकमधुरे लुठतीव तीरे ।
नित्यं नितान्तमधुरीभवितुं सुधाभुग्-भोग्यः सुधारुचिरपि प्रतिमामिषेण ॥ २६
एष स्फुरद्गुरुमुनिप्रसरामिहैव, स्वर्दण्डदर्शनपरां वसतिं वितेने ।
यस्यां यश सितरुचिर्विशदः स कोऽपि, जज्ञेऽस्य यत्र विधुरेव बभूव चिह्नम् ॥ २७
तत्र प्रपेयमपि तेन नवा वितेने, यां प्राप्य शीत-मधुरोज्ज्वलहारिवारिम् ।
पीयूषकुण्डहिमधामजमेव गर्व-सर्वस्वमन्यजगतोर्जगती बभञ्ज ॥ २८
माधुर्यधुर्यमतुलामृतकुण्डवृन्द-स्यन्दानुविद्धमिव यत्र जलं रराज ।
ग्रामेऽर्कपालितकनामनि तेन तेने, पातालमूलगतखातगुरुस्तडागः । २९
श्रीस्तम्भनाख्यपुरतीर्थपतिं निभाल्य, सद्गुणानलचिते न स उज्जयन्ते ।
द्वेधोत्थितैर्दिवि यशोभिरदादपूर्वं, द्वैराज्यदु.खममृतांशु-नभःश्रवन्त्योः ॥ ३०
स स्तम्भनाभिधपुरेऽद्भुतमुद्दधार, श्रीपार्श्ववेश्म किमपि स्मितवैभवं तत् ।
यत्रागतौ नवकृतप्रतिमाछलेन, कौतूहलाद् विमल-रैवतकादिदेवौ ॥ ३१
तेन प्रपाद्वयमिहाघटि पार्श्वपार्श्वे स्थित्यैव तादृशगुणप्रगुणं किलैतत् ।
छायामनोज्ञममृताभजलं बिभेद, तापं बहि स्थमबहि स्थमपि प्रजायाः ॥ ३२
श्रीवैद्यनाथसदनात् किल मालवेशो, दर्भावतीभुवि जहार सुवर्णकुम्भान् ।
श्रीकेलिवेश्म सचिवस्तु स वस्तुपाल-स्तस्मिन् दधौ दिनपतिप्रतिमचिपस्तान् ॥ ३३
चक्रेऽर्बुदाख्यगिरिमूर्ध्नि निजाग्रजन्म-श्रीमल्लदेवसुकृताय स मल्लिदेवम् ।
तद्देहदीधितिभिरञ्जनमञ्जुलाभि-र्लक्ष्मायितं भ्रममुष्य यशःशशाङ्के ॥ ३४
शक्तः क वक्तुमहमल्पमतिर्बहूनि, श्रीवस्तुपालसचिवेश्वरकीर्तनानि ।
यत्सङ्ख्यया दिवि विधिर्व्यथितोडुनिन्दून्, शीतांशुना खटिकयैव फलानि दातुम् ॥ ३५
इत्थमन्त्रिकिरीटकीर्तनपटारारब्धचमानैर्मुहु',
कीर्तीना निवहैरहम्प्रथमिकावष्टम्भसरम्भिभिः ।
तन्मानाधिकवर्धनव्यसनिभिर्मन्ये विभिन्नं नभ,
स्वर्दण्डच्छलकथ्यमाणविशदप्रस्फोटरेखास्पदम् ॥ ३६

किञ्च—

विश्राम्यन्तु भुजङ्गराजरजनीजानिप्रभाराजिनी-
जीवातुस्तनयित्नवो ! नयनयश्री या भवन्ताश्चिरम् ।
उत्तम्भे भुजया यशोभिरमलं दीप्रं प्रतापैर्द्विप-
दानैः सिक्तमिदं तनोतु भुवनं श्रीवस्तुपालः सदा ॥ १

विश्वं न स्यादनीदृग् निखिलमपि कदाऽप्येष लोकप्रवादः,
कल्पे कल्पे ततस्त्वं मदयसि विदुषो लब्धपुण्यावतारः ।
कल्पद्रुः कामधेनुस्त्रिदशमणिरपि श्रीवसन्त ! श्रवन्ती-
भूयाम्भोधिं गतानामिति भवति भवद्दानवारां विवर्त्तः ॥ २

स्फूर्जत्फेनावलिवलयितोत्तालकल्लोलमाला-
लीलालोलज्जलधिवलयव्याजतो वस्तुपाल ! ।
क्रीडन्त्येता रणभुवि भवत्कीर्त्तयः स्तम्भतीर्थ-
प्रान्ते प्रीतिस्तवकितरसाः शङ्खदुष्कीर्त्तयश्च ॥ ३

विश्वेऽस्मिन्नरिसिंहकोविदकृतप्रौढप्रबन्धाद्भुत-
श्रीमन्त्रीश्वरवस्तुपालयशसी पीयूषपूरोपमे ।
एते हर्षवशादशेषविबुधैरास्वादनीये मिथः-
सङ्क्रान्त्या क्षणलब्धसिद्धिविभवे यावज्जगन्नन्दताम् ॥ ४

प्रतिसर्गं प्रबन्धेऽस्मिन्नरिसिंहविनिर्मिते । इमान्यङ्क चत्वारि, काव्यान्यमरपण्डितः ॥ ५

॥ इति सुकृतसंकीर्त्तननाम्नि महाकाव्ये सकलकीर्त्तन-
कोर्त्तनो नामैकादशः सर्गः ॥ ११ ॥



गूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवकविविरचित–

## कीर्त्तिकौमुदीमहाकाव्यस्थश्लोकानामकारादिक्रमेणानुक्रमः ।

अरिसिंहकविविरचित–

## सुकृतसंकीर्त्तनमहाकाव्यस्थश्लोकानामकारादिक्रमेणानुक्रमः ।